॥ प्राणाग्निहोत्रोपनिषत् ॥

शरीरयज्ञसंशुद्धचित्तसंजातबोधतः ।
मुनयो यत्पदं यान्ति तद्रामपदमाश्रये ॥

ॐ सह नाववतु ॥ सह नौ भुनक्तु ॥ सह वीर्यं
करवावहै ॥ तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ॥ अथातः सर्वोपनिषत्सारं संसारज्ञानातीत-
मन्त्रसूक्तं शारीरयज्ञं व्याख्यास्यामः । यस्मिन्नेव
पुरुषः शरीरे विनाप्यग्निहोत्रेण विनापि सांख्ययोगेन
संसारविमुक्तिर्भवतीति । स्वेन विधिनान्नं भूमौ निक्षिप्य
या ओषधीः सोमराज्ञीरिति तिसृभिरन्नपत इति द्वाभ्या-
मनुमन्त्रयते । या ओषधयः सोमराज्ञीर्बह्वीः शतविचक्षणाः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चत्वंहसः ॥ १॥

याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चत्वंहसः ॥ २॥

जीवला नघारिषां माते बध्नामोषधिम् ।
यातयायु रुपाहरादप रक्षांसि चातयात् ॥ ३॥

अन्नपतेऽन्नस्य नो वेह्यनमीवस्य शुष्मिणः ।
प्रप्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥ ४॥

यदन्नमग्निर्बहुधा विराद्धि
  रुद्रैः प्रजग्धं यदि वा पिशाचैः ।
सर्वं तदीशानो अभयं कृणोतु
  शिवमीशानाय स्वाहा ॥ ५॥

अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ।
त्वं यज्ञस्त्वं ब्रह्मा त्वं रुद्रस्तवं विष्णुस्त्वं वषट्कार
आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोंनमः ।
आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम् ।
पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम् ।
यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम ।

सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहं स्वाहा ।
अमृतमस्य मृतोपस्तरणमस्यमृतं प्राणे जुहोम्यमाशिष्यान्तोऽसि ।
प्राणाय स्वाहा । अपानाय स्वाहा । व्यानाय स्वाहा । उदानाय स्वाहा ।
समानाय स्वाहा । इति कनिष्ठिकाङ्गुल्याङ्गुष्ठेन च प्राणे जुहोति ।
अनामिकयापाने । मध्यमया व्याने । सर्वाभिरुदाने । प्रदेशिन्या समाने ।
तूष्णीमेकामेकऋषौ जुहोति । द्वे आहवनीये ।
एकां दक्षिणाग्नौ । एकां गार्हपत्ये । एकां सर्वप्रायश्चित्तीये ॥

अथापिधानमस्यमृतत्वायोपस्पृश्य पुनरादाय पुनरुपस्पृशेत् ।
स ते प्राणा वाऽऽपो गृहीत्वा हृदयमन्वालभ्य जपेत् ।
प्राणो अग्निः परमात्मा पञ्चवायुभिरावृतः ।
अभयं सर्वभूतेभ्यो न मे भीतिः कदाचन ॥ १॥

इति प्रथमः खण्डः ॥ १॥

विश्वोऽसि वैश्वानरो विश्वरूपं त्वया धार्यते
जायमानम् । विश्वं त्वाहुतथः सर्वा यत्र
ब्रह्माऽमृतोऽसि । महानवोऽयं पुरुषो
योऽङ्गुष्ठाग्रे प्रतिष्ठितः । तमद्भिः परिषिञ्चामि
सोऽस्यान्ते अमृताय च । अनावित्येष बाह्यात्मा
ध्यायेताग्निहोत्रं जोहोमीति । सर्वेषामेव सूनुर्भवति ।
अस्य यज्ञपरिवृता आहुतीर्होमयति । स्वशरीरे यज्ञं
परिवर्तयामीति । चत्वारोऽग्नयस्ते किंभागधेयाः ।
तत्रसूर्योऽग्निर्नाम सूर्यमण्डलाकृतिः सहस्ररश्मि-
परिवृत एकऋषिर्भूत्वा मूर्धनि तिष्ठति । यस्मादुक्तो
दर्शनाग्निर्नाम चतुराकृतिराहवनीयो भूत्वा मुखे तिष्ठति ।
शारीरोग्निर्नाम जराप्रणुदा हविरवस्कन्दति । अर्धचन्द्राकृति-
र्दक्षिणाग्निर्भूत्वा हृदये तिष्ठति तत्र कोष्ठाग्निरिति ।
कोष्ठाग्निर्नामाशितपीतलीढखादितानि सम्यग्व्यष्ट्यां
श्रपयित्वा गार्हपत्यो भूत्वा नाभ्यां तिष्ठति ।
प्रायश्चित्तयस्त्वधस्तात्तिर्यक् तिस्रो हिमांशुप्रभाभिः
प्रजननकर्मा ॥

इति द्वितीयः खण्डः ॥ २॥

अस्य शरीरयज्ञस्य यूपरशनाशोभितस्य
को यजमानः । का पत्नी । के ऋत्विजः । के सदस्याः ।
कानि यज्ञपात्राणि । कानि हवींषि । का वेदिः ।

कोत्तरवेदिः । को द्रोणकलशः । को रथः । कः पशुः ।
कोऽध्वर्युः । को होता । को ब्राह्मणाच्छंसी ।
कः प्रतिप्रस्थाता । कः प्रस्तोता । को मैत्रावरुणः ।
क उद्गाता । का धारापोता । के दर्भाः । कः स्रुवः ।
काज्यस्थाली । कावाघारौ । कावाज्यभागौ । केऽत्र
याजाः । के अनुयाजाः । केडा । कः सूक्तवाकः ।
कः शंयोर्वाकः । का हिंसा । के पत्नीसंयाजाः ।
को यूपः । का रशना । का इष्टयः । का दक्षिणा ।
किमवभृतमिति ॥

इति तृतीयः खण्डः ॥ ३॥

अस्य शारीरयज्ञस्य यूपरशनाशोभितस्यात्मा यजमानः ।
बुद्धिः पत्नी । वेदा महर्त्विजः । अहङ्कारोऽध्वर्युः । चित्तं
होता । प्राणो ब्राह्मणच्छंसी । अपानः प्रतिप्रस्थाता ।
व्यानः प्रस्तोता । उदान उद्गाता । समानो मैत्रवरुणः ।
शरीरं वेदिः । नासिकोत्तरवेदिः । मूर्धा द्रोणकलशः ।
पादो रथः । दक्षिणहस्तः स्रुवः । सव्यहस्त आज्यस्थाली ।
श्रोत्रे आघारौ । चक्षुषी आज्यभागौ । ग्रीवा धारापोता ।
तन्मात्राणि सदस्याः । महाभूतानि प्रयाजाः । भूतानि
गुणा अनुयाजाः । जिह्वेडा । दन्तोष्ठौ सूक्तवाकः । तालुः
शंयोर्वाकः । स्मृतिर्दया क्षान्तिरहिंसा पत्नीसंयाजाः ।
ओङ्कारो यूपः । आशा रशना । मनो रथः । कामः पशुः ।
केशा दर्भाः । बुद्धीन्द्रियाणि यज्ञपात्राणि । कर्मेन्द्रियाणि
हवींषि । अहिंसा इष्टयः । त्यागो दक्षिणा । अवभृतं
मरणात् । सर्वा ह्यस्मिन्देवताः शरीरेऽधिसमाहिताः ।
वाराणस्यां मृतो वापि इदं वा ब्रह्म यः पठेत् । एकेन
जन्मना जन्तुर्मोक्षं च प्राप्नुयादिति मोक्षं च
प्राप्नुयादित्युपनिषत् ॥ ३॥

ॐ सह नाववतु ॥ सह नौ भुनक्तु ॥ सह वीर्यं करवावहै ॥

तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ तत्सत् ॥

